# दत्तात्रेय सहस्रनाम स्तोत्रम्

दत्तात्रेयो महायोगी योगीशश्च अमरप्रभुम् ।
मुनिर्दिगंबरो बालो मायामुक्तो मदापहः ॥ १ ॥

अवधूतो महानाथः शंकरो अमरवल्लभः ।
महादेवश्च आदिदेवः पुराणप्रभुरीश्वरः ॥ २ ॥

सत्त्वकृत् सत्त्वभृङ्गावः सत्त्वात्मा सत्त्वसागरः ।
सत्त्ववित् सत्त्वसाक्षी च सत्त्वसाध्योऽमराधिपः ॥ ३ ॥

भूतकृत्भूतभृच्चैव भूतात्मा भूतसंभवः ।
भूतभावश्च भावश्च भूतविद्भूत कारणम् ॥ ४ ॥

भूतसाक्षी प्रभूतिश्च भूतानां परमागतिः ।
भूतसंग विमीनात्मा भूतात्मा भूतशंकरः ॥ ५ ॥

भूतनाथो महानाथः आदिनातो महेश्वरः ।
सर्वभूत निवासात्मा भूतसन्ताप नाशनः ॥ ६ ॥

सर्वात्मा सर्वभृत्सर्वः सर्वज्ञः सर्वनिर्णयः ।
सर्वसाक्षी बृहद्भानुः सर्वविद् सर्वमन्गलम् ॥ ७ ॥

शान्तः सत्यः समः पूर्णोः एकाकी कमलापतिः ।
रामो रामप्रियश्चैव विरामो रामकारणम् ॥ ८ ॥

शुद्धात्मा पावनोनन्तं प्रतीतः परमार्थभृत् ।
हंससाक्षी विभुश्चैव प्रळय एव च ॥ ९ ॥

सिद्धात्मा परमात्मा च सिद्धानां परमागतिः ।
सिद्धिसिद्धयः साध्यश्च साधनं च उत्तमायनम् ॥ १० ॥

सुलक्षणः सुमेधावी विद्यावान् विगतान्तरः ।
विज्वरश्च महाबाहुः बहुलानन्दवर्धनः ॥ ११ ॥

अव्यक्तपुरुषः प्राज्ञः परज्ञायः परमार्थदृक् ।
परापर विनिर्मुक्तो मुक्तः तत्त्व प्रकाशवान् ॥ १२ ॥

दयावान् भगवान भावी भावात्मा भवकारणम् ।
भवसन्तापनाशश्च पुष्पवान् पण्डितो बुधः ॥ १३ ॥

प्रत्यक्षवस्तु विश्वात्मा प्रत्यगह्म सनातनः ।
प्रमाणविगतश्चैव प्रत्याहार नियोजकः ॥ १४ ॥

प्रणवः प्रणवातीतः प्रमुखं प्रळयात्मकः ।
मृत्युन्जयो विविक्तात्मा शन्करात्मा  परं वपुः ॥ १५ ॥

परमः तनुविज्ञेयः परमात्मनि संस्थितः ।
प्रबोधकलनाधारः प्रभाव प्रवरोत्तमः ॥ १६ ॥

चिदंबरः चिद्विलासः चिदाकाशः चिदुत्तमः ।
चित्त चैतन्य चित्तात्मा देवानां परमागतिः ॥ १७ ॥

अचेत्यः चेतनाधारः चेतनाचित् विक्रमः ।
चित्तात्मा चेतनारूपो लसत्पंकजलोचनः ॥ १८ ॥

परंब्रह्म परंज्योतिः परंधाम परन्तपः ।
परं सूत्रं परं तंत्रं पवित्रं परमोहवान् ॥ १९ ॥

क्षेत्रज्ञः क्षेत्रगः क्षेत्रं क्षेत्राधारः पुरंजनः ।
क्षेत्रशून्यो लोकसाक्षी क्षेत्रवान् बहुनायकः ॥ २० ॥

योगी योगपूज्यश्च योग्यः आत्मविदां शुचिम् ।
योगमायाधरः स्थाणु अचलः कमलापतिः ॥ २१ ॥

योगेशो योगनिर्माता योगज्ञान प्रकाशनः ।
योगपालो लोकपालः संसार तमनाशनः ॥ २२ ॥

गुह्यो गुह्यतमो गुप्तः मुक्तो मुक्तः सनातनः ।
गहनो गगनाकारो गंभीरो गणनायकः ॥ २३ ॥

गोविन्दो गोपतिर्गोप्ता गोभागो भावसंस्थितः ।
गोसाक्षी गोतमारिश्च गांधारो गगनाकृतिः ॥ २४ ॥

योगयुक्तो भोगयुक्तः शंकामुक्तः समाधिमान् ।
सहजः सकलेशानः कार्तवीर्य वरप्रदः ॥ २५ ॥

सरजा विरजाः पुंसो पापनः पापनाशनः ।
परापरविनिर्मुक्तः परंज्योतिः पुरातनः ॥ २६ ॥

नानाज्योतिः अनेकात्मा स्वयंज्योतिः सदाशिवः ।
दिव्यज्योतिर्मयः चैव सत्यविज्ञान भास्करः ॥ २७ ॥

नित्यशुद्धं परः पूर्णः प्रकाशः प्रकटोद्भवः ।
प्रमादविगतः चापि परेशः परविक्रमः ॥ २८ ॥

योगी योगो योगपायश्च योगाभ्यास प्रकाशनः ।
योक्ता मोक्ता विधाता च त्रात्र पात्र निरायुधः ॥ २९ ॥

नित्यमुक्तो नित्ययुक्तः सत्यः सत्यपराक्रमः ।
सत्त्वशुद्धिकरश्चैव सत्त्वं सत्त्वभृतां गतिः ॥ ३० ॥

श्रीधरः श्रीवपुः श्रीमान श्रीनिवासोऽमरार्चितः ।
श्रीनिधिः श्रीपतिः श्रेष्ठः श्रेयस्कः चरमाश्रयः ॥ ३१ ॥

त्यागी त्यागार्थसंपन्नः त्यागात्मा त्यागविग्रहः ।
त्यागलक्षण सिद्धात्मा त्यागज्ञः त्यागकारणः ॥ ३२ ॥

भोगो भोक्ता च भोग्यश्च भोगसाधनकारणः ।
भोगी भोगार्थसंपन्नो भोगज्ञान प्रकाशकः ॥ ३३ ॥

केवलः केशवः कृष्णं कंवासः कमलालय ।
कमलासन पूज्यश्च हरिः अज्ञानखण्डनः ॥ ३४ ॥

महात्मा महदादिश्च महेशोत्तम वन्दितः ।
मनोवृद्धि विहीनात्मां मानात्मा मानवाधिपः ॥ ३५ ॥

भुवनेशो विभूतिश्च धृतिर्मेधाः स्मृतिर्दया ।
दुःखदावानलः बुद्धः प्रबुद्धः परमेश्वरः ॥ ३६ ॥

कामहा क्रोधहा चैव दंभ दर्प मदापहः ।
अज्ञानतिमिरारिश्च भवारिः भुवनेश्वरः ॥ ३७ ॥

रूपकृत् रूपभृत् रूपी रूपात्मा रूपकारणम् । ॥
रूपज्ञो रूपसाक्षी च नामरूपो गुणान्तकः ॥ ३८ ॥

अप्रमेयः प्रमेयश्च प्रमाणं प्रणवाश्रयः ।
प्रमाणरहितो चिंत्यः चेतनाविगतो जरः ॥ ३९ ॥

अक्षरो क्षरमुक्तश्च विज्वरो ज्वरनाशनः ।
विशिष्टो वित्तशास्त्री च दृष्टो दृष्टान्त वर्जितः ॥ ४० ॥

गुणेशो गुणकायश्च गुणात्मा गुणभावनः ।
अनन्तगुणसंपन्नो गुणगर्भो गुणाधिपः ॥ ४१ ॥

गणेशो गुणनाथश्च गुणात्मा गुणभावनः ।
गुणबन्धः विवेकात्मा गुणयुक्तः पराक्रमी ॥ ४२ ॥

अतर्क: आकृत: अग्निश्च कृतज्ञ: सफलाश्रय: ।
यज्ञो यज्ञफलदाता यज्ञी अमरोत्तम ॥ ४३ ॥

हिरण्यगर्भ: श्रीगर्भ: स्वगर्भ: कुणपेश्वर: ।
मायागर्भो लोकगर्भ: स्वयंभू: भुवनान्तक: ॥ ४४ ॥

निष्पापो निबिडो नंदी बोधी बोधसमाश्रय: ।
बोधात्मा बोधनात्मा च भेदवैतंड खण्डन: ॥ ४५ ॥

स्वाभाव्यो भावनिर्मुक्तो व्यक्तोऽव्यक्त समाश्रय: ।
नित्यतृप्तो निराभासो निर्वाण: शरणं सुहृत् ॥ ४६ ॥

गुह्येशो गुणगंभीरश्च गुणदोष निवारण: ।
गुणसंग विहीनश्च योगारीदर्पनाशन: ॥ ४७ ॥

आनन्द: परमानन्द: स्वानन्द सुखवर्धन: ।
सत्यानन्द: चिदानन्द सर्वानन्द परायण: ॥ ४८ ॥

सद्रूप: सहज: सत्य स्वानन्द: सुमनोहर: ।
सर्व: सर्वान्तरश्चैव पूर्वात्पूर्वान्तराय च ॥ ४९ ॥

स्वमय: स्वपर: स्वादि स्वंब्रह्म स्वतनु: स्वग: ।
स्ववासा: स्वविहीनश्च स्वनिधि: स्वपराक्षय: ॥ ५० ॥

अनन्त: आदिरूपश्च सूर्यमण्डल मध्यग: ।
अमोघ: परमामोघ: परोक्ष: वरद: कविम् ॥ ५१ ॥

विश्वचक्षुर्विश्वसाक्षी विश्वबाहुर्धनेश्वर: ।
धनन्जयो महातेजा: तेजिष्ण: तैजस्सुखी ॥ ५२ ॥

ज्योति: ज्योतिर्मयो जेता ज्योतिषांपतिरात्मक: ।
ज्योतिषामपि ज्योतिश्च जनको जनमोहन: ॥ ५३ ॥

जितेन्द्रियो जितक्रोधो जितात्मा जितमानसः ।
जितसन्गो जितप्राणं जितसंसारवासनः ॥ ५४ ॥

निर्वासनो निरालंबो निर्योग क्षेमवर्जितः ।
निरीहो निरहंकारो निराशीः निरुपाधिकः ॥ ५५ ॥

नित्यबोधो विविक्तात्मा विशुद्धोत्तम गौरवः ।
विद्यार्थी परमार्थी च श्रद्धार्थी साधनात्मकः ॥ ५६ ॥

प्रत्याहारी निराहारी सर्वाहार परायणम् ।
नित्यशुद्धो निराकांक्षी पारायण परायणः ॥ ५७ ॥

अणोः अणुतरः सूक्ष्मं स्थूलः स्थूलतरोऽपि च ।
एकश्चानेकरूपश्च विश्वरूपः सनातनः ॥ ५८ ॥

नैकरूपो निरूपात्मा नैकबोधमयोऽपि च ।
नैकनाममयश्चैव नैकविद्या विवर्धनः ॥ ५९ ॥

एकः च एकान्तिकश्चैव नानाभाव विवर्जितः ।
एकाक्षरं च बीजं च पूर्णबिंबः पनातनः ॥ ६० ॥

मन्त्रवीर्यो मन्त्रबीजं शास्त्रवीर्यो जगत्पतिः ।
नानावीर्यधरः चक्रेशः चैव पृथिवीपतिः ॥ ६१ ॥

प्राणेशः प्राणदः प्राणः प्राणायाम परायणः ।
प्राणपंचक निर्मुक्तः कोशपंचक वर्जितः ॥ ६२ ॥

निश्चलो निष्कलोसंगः निष्प्रपंचो निरामयः ।
निराधारो निराकारो निर्विकारो निरंजनः ॥ ६३ ॥

निष्प्रतीतो निराभासो निरासक्तो निराकुलम् ।
निष्ठासर्वगतश्चैव निरारंभो निराश्रयः ॥ ६४ ॥

निरन्तरः सत्त्वगोप्ता शान्तो दान्तो महामुनिः ।
निःशब्दः सुकृतः स्वस्थः सत्यवादी सुरेश्वरः ॥ ६५ ॥

ज्ञानदो ज्ञानविज्ञानी ज्ञानात्मानन्दपूरितः ।
ज्ञानयज्ञविदां दक्षो ज्ञानाग्निः ज्वलनो बुधः ॥ ६६ ॥

दयावान् भवरोगारिं चिकित्सा चरमागतिः ।
चन्द्रमण्डल मध्यस्थः चन्द्रकोटि सुशीतलः ॥ ६७ ॥

यन्त्रकृत् परमो यन्त्री यन्त्रारूढ पराजितः ।
यन्त्रवित् यन्त्रवासश्च यन्त्राधारो धराधरः ॥ ६८ ॥

तत्त्वज्ञः तत्त्वभूतात्मा महातत्त्व प्रकाशनः ।
तत्त्व संख्यान योगज्ञः सांख्यशास्त्र प्रवर्तकः ॥ ६९ ॥

अनन्तविक्रमो देवो माधवश्च धनेश्वरः ।
साधुः साधु वरिष्ठात्मा सावधानोऽमरोत्तमः ॥ ७० ॥

निःसन्कल्पो निराधारो दुर्धरः आत्मविद्पतिः ।
आरोग्य सुखदश्चैव प्रवरो वासवः परः ॥ ७१ ॥

परमश्च पुण्यगदारश्च प्रत्यक् चैतन्यदुर्गमः ।
दुराधारो दुरावासो दूरत्वपरिनाशवः ॥ ७२ ॥

वेदवित्वेदकृत् वेदो वेदात्मा विमलाशयः ।
विविक्त सेवी संसारश्रमनाशन एव च ॥ ७३ ॥

ब्रह्मयोनिः बृहद्योनिः विश्वयोनिः विदेहवान् ।
विशालाक्षो विश्वनाथो हाटकांगद भूषणः ॥ ७४ ॥

अबाध्यो जगदाराध्यो जगदासर्वपालनः ।
जनवान् धनवान् धर्मी धर्मगो धर्मवर्धनः ॥ ७५ ॥

अमृतः शाश्वतस्साद्यः सिद्धिदः सुमनोहरः ।
खलुब्रह्म खलुस्थानो मुनीनां परमागतिः ॥ ७६ ॥

उपद्रष्टा च श्रेष्ठश्च शुचिर्भूतः अनामयः ।
वेदसिद्धान्तः वेद्यश्च मानसाह्लादवर्धनः ॥ ७७ ॥

देहदन्यो गुणादन्यो लोकादन्यो विवेकवित् ।
दुष्टस्वप्नहरश्चैव गुरुर्गुरुवरोत्तमः ॥ ७८ ॥

कर्मी कर्मविनिर्मुक्तं सन्यासी साधकेश्वरः ।
सर्वभावविमीनश्च तृष्णासंग निवारकः ॥ ७९ ॥

त्यागी त्यागवपुः त्यागः त्यागदान विवर्जितः ।
त्यागकारणः त्यागात्मा सद्गुरुः  सुखदायकः ॥ ८० ॥

दक्षो दक्षादिवन्द्यश्च ज्ञानवाद प्रवर्तकः ।
शब्दब्रह्ममयात्मा च शब्दब्रह्म प्रकाशवान् ॥ ८१ ॥

ग्रसिष्णुः प्रभविष्णुश्च सहिष्णुर्विगतान्तरः ।
विद्वत्तमो महावन्द्यो विशालोत्तमवाङ्मुनिः ॥ ८२ ॥

ब्रह्मविद्ब्रह्मभावश्च ब्रह्मऋषिः ब्राह्मणप्रिय ।
ब्रह्म ब्रह्मप्रकाशात्मा ब्रह्मविद्या प्रकाशनः ॥ ८३ ॥

अत्रिवंश प्रभूतात्मा तापसोत्तम वन्दितः ।
आत्मवासी विधेयात्मा च आत्मवंश विवर्धनः ॥ ८४ ॥

प्रवर्तनो निवृतात्मा प्रलयोदक सन्निभः ।
नारायणो महागर्भो भार्गवप्रिय कृत्तमः ॥ ८५ ॥

सन्कल्पः दुःखदलनः संसारतमनाशनः ।
त्रिविक्रमः त्रिधाकारः त्रिमूर्तिः त्रिगुणात्मकः ॥ ८६ ॥

भेदत्रयहरश्चैव तापत्रयनिवारकः ।
दोषत्रयविभेदी च संशयार्णवखण्डनः ॥ ८७ ॥

असंशयच असम्मूढः अवादीराजनन्दितः ।
राजयोगी महायोगी स्वभावगलितोऽपि च ॥ ८८ ॥

पुण्यश्लोकः पवित्राङ्घ्रिः ध्यानयोग परायणः ।
ध्यानस्थो ध्यानगम्यश्च विधेयात्मा पुरातनः ॥ ८९ ॥

अविज्ञेयो अन्तरात्मा च मुख्यबिंब सनातनः ।
जीवसंजीवनो जीवः चिद्विलासः चिदाश्रयः ॥ ९० ॥

महेन्द्रो अमरमान्यश्च योगेन्द्रो योगवित्तमः ।
योगधर्मश्च योगश्च तत्त्वं तत्त्वविनिश्चयः ॥ ९१ ॥

नैकबाहुः अनन्तात्मा नैकनाम पराक्रमः ।
नैकाक्षी नैकपादश्च नाथनाथोत्तम उत्तमः ॥ ९२ ॥

सहस्रशीर्षापुरुषः सहस्राक्षः सहस्रपात् ।
सहस्ररूपदृकैव सहस्रमयोद्भवः ॥ ९३ ॥

त्रिपादपुरुषश्चैव त्रिपादूर्ध्वं अथापि च ।
त्र्यंबकश्च महावीर्यो योगवीर्य विशारदः ॥ ९४ ॥

विजयी विनयी जेता वीतरागी विराजितः ।
रुद्रो रौद्रो महाभीमः प्राज्ञमुख्यः सदाशुचिः ॥ ९५ ॥

अन्तर्ज्योतिर् अनन्तात्मा प्रत्यगात्मा निरन्तरः ।
अरूपश्च आत्मरूपश्च सर्वभाव विनिर्वृतः ॥ ९६ ॥

अन्तःशून्यो बहिश्शून्यः शून्यात्मा शून्यभावनः ।
अन्तःपूर्णो बहिपूर्णः पूर्णात्मा पूर्णभावनः ॥ ९७ ॥

अन्तःत्यागी बहिःत्यागी त्यागात्मा सर्वयोगवान् ।
अन्तर्यागी बहिर्यागी सर्वयोग परायणः ॥ ९८ ॥

अन्तर्भोगी बहिर्भोगी सर्वभोग विदुत्तमः ।
अन्तर्निष्ठो बहिर्निष्ठः सर्वनिष्ठामयोऽपि च ॥ ९९ ॥

बाह्यान्तर विमुक्तश्च बाह्यान्तर विवर्जितः ।
शान्तःशुद्धो विशुद्धश्च निर्वाणः प्रकृते परः ॥ १०० ॥

अकालः कालनेमी च कालकालो जनेश्वरः ।
कालात्मा कालकर्ता च कालज्ञः कालनाशनः ॥ १०१ ॥

कैवल्यपददाता च कैवल्यसुखदायकः ।
कैवल्य कलनाधारो निर्भरो हलारिवर्धनः ॥ १०२ ॥

हृदयस्थो हृषीकेशो गोविन्दो गर्भवर्जितः ।
सकलागम पूज्यश्च निगमो निगमाश्रयः ॥ १०३ ॥

पराशक्तिः पराकीर्तिः परावृत्तिः निधिः स्मृतिः ।
पराविद्या पराक्षान्तिं विभक्तिर्युद्ध सद्गतिः ॥ १०४ ॥

स्वप्रकाशः प्रकाशात्मा परसंवेदनात्मकः ।
स्वसेव्यः स्वविदां स्वात्मा स्वसंवेदयो नघः क्षमी ॥ १०५ ॥

स्वानुसंधान शीलात्मा स्वानुसंधान गोचरः ।
स्वानुसंधान शून्यात्मा स्वानुसंधानाश्रयोऽपि च ॥ १०६ ॥

स्वबोध दर्पणोभङ्गः कन्दर्पकुलनाशनः ।
ब्रह्मचारी ब्रह्मवेत्ता ब्राह्मणो ब्रह्मवित्तमः ॥ १०७ ॥

तत्त्वबोधः सुधावर्षः पवनः पापपावकः ।
ब्रह्मसूत्र विधेयात्मा ब्रह्मसूत्रार्धनिर्थय ॥ १०८ ॥

आत्यन्तिको महाकल्पं सन्कल्पावर्तनाशनः ।
आदिव्याधि हरश्चैव संशयार्णवशोषकः ॥ १०९ ॥

तत्त्वज्ञानसंदेशो महानुभावभावितः ।
आत्मानुभव संपन्नः स्वानुभाव सुखाश्रयः ॥ ११० ॥

अचिन्त्यश्च ब्रहद्भानु प्रमदोत्कर्षादिनाशनः ।
अनिकेत प्रशांतात्मा शून्यवासा जगद्वपुः ॥ १११ ॥

चिद्गतिः चिन्मयः चक्री मायचक्र प्रवर्तकः ।
सर्ववर्ण विदारंभी सर्वारंभ परायणः ॥ ११२ ॥

पुराणः प्रवरो दाता सुन्दरः कनकान्गदी ।
अनिसूयात्मजो दत्तः सर्वज्ञः सर्वकामदः ॥ ११३ ॥

कामिजत्कामपालश्च कामी कामप्रदामगम् ।
कामवान् कामवेषश्च सर्वकाम निवर्तकः ॥ ११४ ॥

सर्वकर्म फलोत्पत्तिः सर्वकाम फलप्रदः ।
सर्वकर्मफलैः पूज्यं सर्वकर्म फलाश्रयः ॥ ११५ ॥

विश्वकर्मा कृतात्माच कृतज्ञः सर्वसाक्षिणः ।
सर्वारंभ परित्यागी जडोन्मत्त पिशाचवान् ॥ ११६ ॥

भिक्षुर्भिक्षाकरश्चैव भिक्षाहारी निराश्रमी ।
अकूलश्चनुकूलश्च विकलश्चाकलोऽपि च ॥ ११७ ॥

जटिलो वनचारी च दन्डी च मुन्डिगण्डिनौ ।
देहधर्म विहीनात्मा च एकाकी सन्गविर्वजितः ॥ ११८ ॥

आश्रम्यनाश्रम आरंभो नाचारी कर्मविवर्जितः ।
असन्देही च सन्देही न किंचिन्नच निन्चनः ॥ ११९ ॥

नृदेही देहशून्यश्च नाभावी भावनर्गतः ।
नाब्रह्मश्च परब्रह्म स्वयमेव निराकुलः ॥ १२० ॥

अनघश्च गुरुश्चैव नाधनाधोत्तमो गुरुम् ।
द्विभुजः प्राकृतश्चैव जनकश्च पितामहः ॥ १२१ ॥

अनात्मा न च नानात्मा नीतिर्नीतिमतांवरः ।
सहजः सदृशः सिद्धश्चैकश्चिन्मात्र एव च ॥ १२२ ॥

न कर्ता चापि कर्ता च भोक्ता भोग विवर्जितः ।
तुरीयः तुरीयातीतः स्वच्छः सर्वमयोऽपि च ॥ १२३ ॥

सर्वाधिष्ठानरूपश्च सर्वध्येय विवर्जितः ।
सर्वलोक निवासात्मा सकलोत्तमवन्दितः ॥ १२४ ॥

देहभृत् देहकृच्चैव देहात्मा देहभावनः ।
देही देहविभक्तश्च देहभाव प्रकाशनः ॥ १२५ ॥

लयस्थो लयविच्चैव लयाभावश्च बोधवान् ।
लयातीतो लयस्यान्तो लयभाव निवारणः ॥ १२६ ॥

विमुखं प्रमुखश्चैव प्रत्यङ्मुख वरदाचन ।
विश्वभुग्विश्वधृग्विश्वो विश्वक्षेमकरोऽपि च ॥ १२७ ॥

अविक्षिप्तोऽप्रमादो च परार्ध परमार्थदृक् ।
स्वानुभाव विहीनश्च स्वानुभाव प्रकाशनः ॥ १२८ ॥

निरीन्द्रियः निर्बुद्धिः निराभासो निराकृतः ।
निरहंकारश्च रूपात्मा निर्वपुषिः सकलाश्रयः ॥ १२९ ॥

शोकदुःखहरश्चैव भोगमोक्ष फलप्रद ।
सुप्रसन्नश्च सूक्ष्मश्च शब्दब्रह्मार्थ संग्रहः ॥ १३० ॥

आगमापाय सून्यश्च स्थानदश्च सतांगतिः ।
अकृतः सुकृतश्चैव कृतकर्म विनिर्वृतः ॥ १३१ ॥

भेदत्रयवारश्चैव देहत्रय विनिर्गतः ।
सर्वकाममयश्चैव सर्वकाम निवर्तकः ॥ १३२ ॥

सिद्धेश्वरो जरः पन्चबाण दर्पहुताशनः ।
चतुराक्षर बीजात्मा स्वभूः चित्कीर्तिभूषणः ॥ १३३ ॥

अगाधबुद्धिः अक्षुब्धः चन्द्रसूर्याग्नि लोचनम् ।
यमदंष्ट्रोऽतिसंहर्ता परमानन्दसागरः ॥ १३४ ॥

लीलाविश्वम्भरो भानुः भैरवो भीमलोचनम् ।
ब्रह्मचर्माम्बरः कालः चलश्चलनान्तकः ॥ १३५ ॥

आदिदेवो जगद्योनिः वासवारि विमर्दनः ।
विकर्म कर्मकर्मज्ञश्च अनन्यगमको गमः ॥ १३६ ॥

अबद्धकर्म शून्यश्च कामराग कुलक्षयः ।
योगान्धकार मथनः पद्मजन्मादि वन्दितः ॥ १३७ ॥

भक्तकामोऽग्रजः चक्री भावनिर्भाव भावकः ।
भेदान्तको महानागो निगूहो गोचरान्तकः ॥ १३८ ॥

कालाग्निशमनः शन्ख चक्र गदाधरः ।
दीप्तो दीनपतिः शास्ता स्वच्छन्दो मुक्तिदायकः ॥ १३९ ॥

व्योमचर्मांबरो भेत्ता भस्मधारी धराधरः ।
धर्मगुप्तश्चान्वयात्मा व्यतिरेकार्थ निर्णयः ॥ १४० ॥

एकोऽनेक गुणाभासो भासनिर्भास वर्जितः ।
भावाभाव स्वभावात्मा भावाभाव विभाववित् ॥ १४१ ॥

योगीहृदय विश्रामो अनन्तविद्या विवर्धनः ।
विघ्नान्तकः त्रिकालज्ञः तत्त्वात्मज्ञानसागरः ॥ १४२ ॥

॥ इति श्री दत्तात्रेय सहस्रनाम स्तोत्रं संपूर्णम् ॥